सर्वतन्त्रस्वतन्त्रैः

श्रीमद्विजयीन्द्रतीर्थश्रीपादैर्विरचिता

# वाग्वैखरी



राजा श्री गुरुराजाचार्यः

श्रीपरिमलप्रकाशनम्
संख्याः १०७



श्रीसुयमीन्द्रमाला
संख्याः ८३

सर्वतन्त्रस्वतन्त्रैः
श्रीमद्विजयीन्द्रतीर्थश्रीपादैर्विरचिता

# वाग्वैखरी


सम्पादकाः

श्रीराघवेन्द्रगुरुवंशभूषणं-विद्याधिराजः

**राजा श्री गुरुराजाचार्यः**

तथा

न्यायवेदान्तालङ्कारविद्वान्

**प्रो. साणूरु भीमभट्टः** एम्. ए





प्रकाशकाः
श्रीपरिमलसंशोधनप्रकाशनमन्दिरद्वारा
प्रकटीकृता

| | | |
|---|---|---|
| ग्रन्थनाम | : | वाग्वैखरी |
| ग्रन्थकर्तारः | : | श्रीमद्विजयीन्द्रतीर्थश्रीपादाः |
| सम्पादकौ | : | राजा श्री गुरुराजाचार्य<br>प्रो. साणूरु भीमभट्टौ |
| प्रकाशकाः | : | श्रीपरिमलसंशोधनप्रकाशनमन्दिरम्, नञ्जनगूडु<br>शाखा—<br>"पद्मनाभः", संख्या १०८४,<br>गिरिनगर—द्वितीयहन्तः,<br>बेंगलूरु — ५६० ०८५ |
| मुद्रणम् | : | प्रथममुद्रणम्-१९९५ |
| अधिकारः | : | ग्रन्थस्यास्य सर्वेऽधिकाराः<br>प्रकाशकैः स्वायत्तीकृताः |
| मौल्यम् | : | पञ्चाशद्रूप्यकाणि<br>(Price Rs. 50/–) |
| अक्षरविन्यासः | : | सुधामुद्रण<br>उत्तरादिमठ कंपौंड्, बसवनगुडि, बेंगलूरु-४ |
| मुद्रकः | : | सत्यश्री (प्रै.) प्रिंटर्स्<br>बेंगलूरु |

# विषयानुक्रमणिका

# १. ग्रन्थसमर्पणम्

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदबृन्दविभूषित-
सर्वन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्त- स्थापनाचार्य-षड्दर्शनाचार्यवर्य
नास्तिकदर्शननिराकरणधुरन्धर-आस्तिकदर्शनमहाचार्य
श्रीमन्मध्वाचार्य समलंकृतश्रीमद्धंसनामकपरमात्मप्रवर्तित-
श्रीमद्द्वैतसाम्राज्य दिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां
श्रीमद्विजयीन्द्रतीर्थ-श्रीमत्सुधीन्द्रतीर्थ-श्रीमद्राघवेन्द्रतीर्थ
गुरुसार्वभौम-श्रीमत्सुमतीन्द्रतीर्थश्रीपादानां चरणकमलेषु
तथा
तत्पीठालंकृतानां परमपूज्यानां कीर्तिशेषाणां

**श्रीमत्सुयमीन्द्रतीर्थसंयमीन्द्राणां**

श्रीपादपद्मेषु
ग्रन्थममुं सभक्तिप्रणामपूर्वकं समर्पयामः

युव संवत्सर आश्विन शु. १५
बेंगलूरु
८-१०-१९९५

इति गुरुपादकिंकराः
**राजा श्री गुरुराजाचार्यः**
**राजा श्री लक्ष्मीनारायणाचार्यः**

# 2. सुवर्णमहोत्सवनिवेदनम्

अहो महदिदं प्रमोदस्थानं नः यदद्य श्रीमद्धंसनामकपरमात्मप्रवर्तित-ज्ञानपीठाध्यक्षाणां जगद्गुरुवराणां श्रीमन्मध्वाचार्याणां वेदान्तसाम्राज्यदिग्विजय-विद्यासिंहासनाधीश्वराणां श्रीमद्राघवेन्द्रतीर्थ गुरुसार्वभौमानां पवित्रमठाधीशानां परमपूज्य १००८ श्रीमत्सुशमीन्द्रतीर्थ-श्रीपादानामाध्यक्ष्ये कर्नाटकराज्यस्य जनप्रियमुख्यमन्त्रिभिस्तत्रभवद्भिः श्रीमद्भिः डि. देवेगौडमहाशयैः उद्घाटित-श्रीमद्राघवेन्द्रगुरुसार्वभौमानां चतुश्शततमजयन्तीमहोत्सवः, श्रीमत्सुयमीन्द्रतीर्थ-यतीन्द्राणां जन्म-शतमानोत्सवः तथा श्रीपरिमलसंशोधन-प्रकाशनमन्दिरस्य सुवर्णमहोत्सवइति महासमारम्भत्रयं आचरिष्याम इति पण्डितप्रकाण्डानां, धार्मिकाणां तथा श्रीगुरुसार्वभौमभक्तानां सविधे निवेदयितुं मोमुदीत्यस्माकं चेत इति।।

त्रिदिनात्मकेऽस्मिन् समारम्भे पण्डितपुण्डरीकाणां विमर्शकविदुषां हरिदास-साहित्यविशारदानां विशेषोपन्यासाः, संगीतम्, हरिकथा, श्रीगुरुवरैर्देवतार्चनम्, तीर्थप्रसादवितरणम्, ब्राह्मण-सुवासिनीनां भोजनम्, प्रत्यहं हवनहोमादिकम् तथा षोडशपण्डित-विमर्शक-साहित्य-संगीत-विशारद-हरिदासवाङ्मयकुशल-धर्मकार्यविशारदेभ्यः प्रशस्तिप्रदानपूर्वकं सम्मानादिकञ्च प्रचलिष्यतीत्यावेदयितुं सन्तोतुष्यामहे।।

विदितचरमेवेदं समेषां यत्-जगद्गुरु श्रीमन्मध्वाचार्यवेदान्तसाम्राज्य-दिग्विजय-विद्यासिंहासनाधीश्वर श्रीमद् राघवेन्द्रगुरुसार्वभौममठाधीश परमपूज्य कीर्तिशेष श्रीमत्सुयमीन्द्रतीर्थ-श्रीमच्चरणानामाज्ञयाऽनुग्रहेण च प्रातःस्मरणीयानां तेषां महनीयानां साम्राट्पोषकत्वे २५-५-१९४५ तमे क्रिस्ताब्दे गरळनगरे (नञ्जनगूडुक्षेत्रे) श्रीराघवेन्द्रतीर्थगुरुपुङ्गवानां पूर्वाश्रमीयौरसदौहित्रो-भयवंशीयैरस्माभिः श्रीपादपुत्र राजा एस्. गुरुराजाचार्य - दिवंगत डा. हुलि. कृ. वेदव्यासाचार्याणां नेतृत्वे श्रीनृसिंहजयन्तीमङ्गलकरमहोत्सवशुभदिने श्रीपरिमलसंशोधनप्रकाशन-मन्दिरमित्येका विद्यासंस्था प्रतिष्ठापिता - इति।

अस्याः विद्यासंस्थायाः उद्देशः ध्येयश्चैवं वर्तते-

१. भारतीयानां नैजसम्पद्भूतशास्त्रग्रन्थानां संग्रहः, २. संरक्षणम्, ३. संशोधनम्, ४. संस्कृतशास्त्रग्रन्थानां कन्नडांग्लभाषायामनुवादः, प्रकाशनम्, ५. एवमेव संस्कृतभाषानभिज्ञानामुपकाराय, भारतीयवेदोपनिषत्सु गीतापुराणेतिहासादिग्रन्थेषु विद्यमानोपदेशसारावबोधार्थं तथा जनसामान्येषु तत्त्व-धर्म-संस्कृति-सदाचार-सत्सम्प्रदायविषये विशेषाभिमानमुद्बोधयितुं च कर्नाटकभाषामय्याः परिमलभिधायाः मासपत्रिकायाः प्रकटीकरणम् ६. भारतदेशे सर्वत्र तत्व-धर्म-संस्कृति-सदाचार-श्रीगुरुसार्वभौमप्रमुख-ज्ञानिवराणां महिमा-हरिदासवाङ्मयादिकमुपन्यासद्वारा प्रसरणकरणम्, ८. प्राचीनाचार्याणां ज्ञानिनायकानां पुण्यदिनाचरणम्, ८. एवं पण्डितप्रकाण्ड-साहित्यविशारद-कविवर्य-हरिदाससाहित्यविशारदान् प्रमुखधार्मिकांश्च प्रशस्तिप्रदानपूर्वकं सम्मानीकरणमित्यादि।।

किञ्च एतत् पूर्वनिर्दिष्टध्येयोद्देशादर्शान् सफलयितुं व्यतीतपञ्चाश-द्वर्षमारभ्य ऐषमोवर्षपर्यन्तं श्रीपरिमलविद्यामन्दिरद्वारा अस्माभिर्यथायोग्यं बहुमुखसेवा समनुष्ठिता इति विबुधवराणां धार्मिकानां, श्रीगुरुभक्तानां च विदितविषय एव वरीवर्ति।।

श्रीपरिमलविद्यामन्दिरस्थापनानन्तरं वयं अखण्डं भारतदेशं सञ्चर्य तत्र तत्र श्रीगुरुसार्वभौमानां पूर्वाश्रमीयैःऔरसदौहित्रवंशीयैः पण्डितैर्धार्मिकैश्च सादरं प्रदत्तानां सहस्राधिकशास्त्रीयग्रन्थानां संग्रहकार्ये उद्युक्ताः। एवमस्माभि-स्संगृहीतेषु-तालपत्रात्मकहस्तलिखितग्रन्थेषु एतावताप्यप्रकाशितान्यपूर्वाणि ग्रन्थरत्नानि विद्योतन्ते। तत्र श्रीमध्व-जयार्य-श्रीपादराज-व्यासराज-विजयीन्द्र-वादिराज-सुधीन्द्र-राघवेन्द्र-सुमतीन्द्र-वादीन्द्र-धीरेन्द्र-व्यासतत्वज्ञतीर्थप्रभृतीनां तथा श्रीराघवेन्द्रमठीय गृहस्थाश्रमशिष्याणां ग्रन्थरत्नान्यपि पञ्चाशदुत्तरशताधिका-न्यस्मद्विद्यामन्दिरस्य श्रीसुमति-सुयमीन्द्रग्रन्थभाण्डागारे विराजन्त इति निवेदयितुमतीव प्रमोदो जायते।।

इदानीं वयं श्रीपरिमलसंशोधनप्रकाशनमन्दिरस्य साधनानि यत्कि-ञ्चिन्निवेदयितुमीहामहे।।

ग्रन्थसंग्रहानन्तरं श्रीपरिमलविद्यामान्दिरद्वारा पण्डितप्रवराणां साहाय्येन ग्रन्थसंशोधनकार्यमारभ्यास्माभिरेतावत्पर्यन्तं शताधिकानि संस्कृत-कन्नड-आंग्ल-तेलुगु-तमिळु-हिंदी-महाराष्ट्रभाषानुवादमयानि ग्रन्थरत्नानि प्रकटीकृतानीति विदितमेव श्रीगुरुभक्तानाम्। एवमेव वयं १९५३ तमवर्षमारभ्य दि।। डा. वेदव्यासाचायार्णां सम्पादकत्वे परिमल शुभनाम्न्याः कन्नड-सांस्कृतिक-मासपत्रिकायाः प्रकाशनकार्यमकरवाम। इदं च सर्वेषां विदितमेव।

एवमेव श्रीमदानन्दतीर्थ-टीकाकृत्पाद-चन्द्रिकाचार्य-राघवेन्द्रगुरुपाद-प्रमुखप्राचीनाचार्यानधिकृत्य षोडशसंख्याकाः परिमलस्मरणसञ्चिकाश्च प्रकटीकृता इति चावेदयामः।।

इत्थमेव श्रीमत्सुयमीन्द्रतीर्थश्रीपादानां वेदान्तसाम्राज्यपरिपालनसमये ततश्च तेषां बृन्दावनप्रवेशानन्तरं स्वप्नद्वारा यथाज्ञापनं श्रीमद्राघवेन्द्र-गुरुसार्वभौमानां सशरीरबृन्दावनप्रवेशस्मरणतया दक्षिणभारते, प्राधान्येन कर्णाटराज्ये (बेंगलूरु) अन्यत्र च अस्मत्परिमलविद्यामन्दिरद्वारा प्रप्रथमतया प्रसारोपन्यासद्वारा, विविधदैनिकपत्रिकासु प्रकटनपूर्वकं च श्रीमद्राघवेन्द्र-स्वामिनां बृन्दावनप्रवेश-त्रिशतमानोत्सवमहत्वं प्रकीर्त्य विशेषतः भारताद्यन्तप्रदेशेषु त्रिशतमानोत्सवाचरणाय सर्वसज्जनगुरुभक्तेभ्यः आह्वानं प्रदाय वयं तत्कार्यनिर्वहणतत्परा अभवाम।

तत्फलरूपतया भारतराजधान्यां, विविधराज्येषु च उत्साहिनो धार्मिकाः, पण्डिताः, राजकीयधुरीणाः गुरुभक्ताश्च शताधिकसमितीः रचयित्वा श्रीगुरुसार्वभौमानां त्रिशतमानमहोत्सवं सयशस्कं श्रद्धाभक्तिपुरस्स-रमाचरितवन्त इत्येतत्; किञ्च अस्मत्संस्थापरतया स्थापित बेंगलूरु-नागरिक-समितिद्वारा त्रिशतमानोत्सवः सवैभवमभूतपूर्वं समाचरित इत्येतत् तथा नञ्जनगूडु सुक्षेत्रे 'राजमन्दिरे' श्री परिमलसंशोधनप्रकाशनमन्दिरस्य रजतोत्सवः, तथा श्रीगुरुवराणां त्रिशतमानोत्सवश्च श्रीव्यासराज-मठाधीश्वराणामाध्यक्ष्ये कर्णाटकराज्यपाल-श्रीधर्मवीरमहोदयाचरितोद्घाटनेन सह समाचर्य तत्काले षोडशसंख्याकशास्त्रग्रन्थानां तथा परिमल-स्मरणसञ्चिकायाश्च प्रकाशनम्, तथा ख्यातपण्डितेभ्यः प्रशस्तिप्रदानपूर्वकं सम्मानादिकमभवदित्येतद्विषयः इतिहासप्रसिद्ध विषय एवेति गुरुभक्तेषु विज्ञापयितुं महानानन्दस्सञ्जायतेऽस्माकम्।।

तथैव श्रीपुरन्दरदासवराणां चतुश्शततमजयन्त्युत्सवः, श्रीसुयमीन्द्र-संयमीन्द्राणां षष्ट्यब्द-सप्तत्यब्दतमवर्धन्त्युत्सवः श्रीसुजयीन्द्रतीर्थानां द्वादशवर्षीय वेदान्तसाम्राज्यपट्टाभिषेकमहोत्सवः, परिमलमासपत्रिकायाः रजतमहोत्सवः, श्रीसुशीलेन्द्रतीर्थगुरुपादानां वज्रमहोत्सवः, 'कलियुगकल्पतरु'नामक मेरुकृतेः प्रकाशनसमारम्भश्च अस्मद्विद्यामन्दिरं सवैभवं ग्रन्थप्रकाशन-पण्डितसम्मानादिपूर्वकम् समाचरत्-इत्येतानि अस्मद्विद्यामन्दिरस्य प्रमुखसाधनानीति सुजनभक्तवृन्देषु विज्ञापयितुमस्माकं प्रमोदः प्रजायते।।

पूर्वोक्तनिखिलमहाकार्याणि केवलं श्रीहरिवायुगुरुसार्वभौमानामनुग्रहेण श्रीमत्सुयमीन्द्रतीर्थपूज्यपादानामाशीर्वादबलेनैव सुनिष्पन्नानीति सधैर्यं निवेदयितु-मपेक्षामहे। आर्थिकतया निष्किञ्चना अप्यस्मत्संस्था, तथापि श्रीगुरुसार्वभौमानां मन्त्रालयमुनीन्द्राणां तथा श्रीमत्सुयमीन्द्रतीर्थ-गुरुवराणामनुग्रहाशीर्वादा एवास्माकं एतादृशकार्यनिर्वहणे महतीं शक्तिमदुरित्यत्र न कापि संशीतिः।। अस्माभिरल्पैरपि ईदृशान्यनन्य-साधारणानि महान्ति कार्यणि गुरुपुङ्गवानां विशेषानुग्रहेण समनुष्ठितानीति प्राञ्जलमनसा अभिहिते न दोषलेशोऽपि।।

श्रीहरि-वायु-गुरुसार्वभौमानामनुग्रहेण श्रीसुयमीन्द्रतीर्थाना-माशीर्वादबलेन च यथायोग्यमेवं सेवा समर्पितवच्छ्रीपरिमलविद्यामन्दिरं एषमः वैशाखशुक्लचतुर्दश्यां श्रीनृसिंहजयन्तीमङ्गलदिने स्वीय-एकपञ्चाशद्वत्सरे पदार्पणमकलयत्। अस्मिन्सुवर्णमहोत्सवहायने सार्थकसेवासमर्पितेत्ययं विषयः सज्जनानां चित्ते चिरस्थानं सम्पादयतु इति वयं परिमलविद्यामन्दिरस्य सुवर्णमहोत्सवः, विद्यामन्दिरस्य केन्द्रशक्ति-भूतानां श्री राघवेन्द्रतीर्थानां चतुश्शततमजयन्तीमहोत्सवः तथा विद्यामन्दिर-स्थापनाभिवृद्धिकृते मुख्यकारणीभूतानां परमपूज्यानां श्रीसुयमीन्द्रतीर्थ-श्रीपादानां जन्मशताब्द्युत्सवश्च इत्येते उत्सवाः विशेषविजृम्भणेन समाचरणीया इति श्रीहरिगुरु-प्रेरणानुसारेणास्माभिस्सुनिश्चितम्।

एतत्कार्यनिर्वहणायास्मद्देशीयकोणेषु कोणेषु प्रचारसञ्चारमाकलय्य श्रीगुरुभक्तेषु अस्मदुत्सवत्रयविषयं विज्ञाप्य तेषां गुरुभक्तानामुदार-साहाय्येन वयमधुना विविधकार्यक्रमप्रसरणपूर्वकमुपरिसूचितसमारम्भस्या-चरणेऽत्र सम्मिलिताः स्मः।।

एतन्महोत्सवस्मरणार्थं श्रीमद्विजयीन्द्र-सुधीन्द्र-राघवेन्द्र-सुमतीन्द्र-प्रमुख-ज्ञानिवराणां प्रबन्धप्रवरान्, अन्येषां महनीयानां श्रेष्ठग्रन्थान् संस्कृत-कर्णाटकांग्लभाषामयीं परिमलसौरभनाम्नीं स्मरणसञ्चिकाञ्च, इत्येवं प्रायः त्रिंशद्विविधभाषामयग्रन्थान् श्रीमत्पूज्यपादानाममृतहस्तेन प्रकाशनमाकलय्य विबुधवरेभ्यः उपहारीकर्तुं प्रहृष्यामः। एवमेव पण्डितप्रकाण्डान्, विमर्शकविदुषः, हरिदाससवाङ्मयविशारदान्, ख्यातनाम्नः धर्माभिमानिनश्च प्रशस्तिप्रदानपूर्वकं सम्मानयितुं सन्तोतुष्यामः।।

एतन्मङ्गलसन्दर्भे संस्थाया अस्याः संस्थापनमुख्यकारणीभूतान् श्रीमत्सुयमीन्द्रतीर्थगुरुपादान् एतत्संस्थायाः साम्राट् पोषकान् कीर्तिशेष श्रीसुजयीन्द्रगुरुवरांश्च स्मारं स्मारं तेषां चरणकमलेषु अनेकदण्डप्रणामान् भक्त्या समर्पयामः। एवमेव हि अधुना सर्वज्ञपीठमधिरूढानां अस्मद्विद्यामन्दिरस्य सम्राट्पोषकणां श्रीसुशमीन्द्रतीर्थगुरुवराणां पादपङ्कजयोरनेकशिरसाष्टाङ्ग-प्रणामानर्पयामः।

एवमेवास्मत्संस्थायाः प्राचीनग्रन्थदानपूर्वकमुपकृतवद्भ्यः, ग्रन्थसंशोधन-सम्पादन-प्रकाशनादिविषये सर्वसाहाय्यमाचरितवद्भ्यः प्रोत्साहितवद्भ्यः सर्वश्री दि. विद्वद्भूषणं दुर्गं भीमाचार्य, पण्डितरत्नं दोड्डबळ्ळापुरं वासुदेवाचार्य, विद्यारत्नं आचार्य वेङ्कोबाचार्य, न्यायविद्याविशारद तिरुवादि अष्टपत्रि विजयीन्द्राचार्य, विद्वद्रत्नं हुलिकुंटे श्रीनिवासाचार्य, विद्यारत्नं राघवेन्द्राचार्य पञ्चमुखी, पं. रा. जयरामाचार्य, पं. साहुकार कृष्णमूर्त्याचार्य, कविरत्नं शिरोमणि यु. आर् रंगनाथाचार्य, पं. रित्ति कृष्णाचार्य, पं. रित्ति सुब्बण्णाचार्य, पं. राजा. श्री. वेणुगोपालाचार्यप्रमुखेभ्यः नमन पुष्पाञ्जलिं समर्पयामः तथा एतद्विद्यामन्दिरस्थापक-सम्पादक वेदान्तरत्नं हुलि. कृ. वेदव्यासाचार्य, पं. एच्. के. विजयीन्द्राचार्थ इत्येतेषामात्मीयानां स्मरणमस्मिन्शुभसन्दर्भे अवश्यं कर्तव्यमिति मन्यामहे।

किञ्च बहुवर्षमारभ्याद्यावधि अस्मद्विद्यामन्दिरस्य ग्रन्थसंशोधन-प्रकाशनादि बहुविधकार्येषु रचनात्मकविचारविनिमयपूर्वकं महान्तमुपकार-माचरितवद्भ्यः प्रियसुहृद्भ्यः न्यायवेदान्तसाहित्यविद्वद्भ्यः प्रा. साणूरु भीमभट्ट एम्.ए. महोदयेभ्यः तथा न्यायवेदान्तालङ्कारधर्मशास्त्रविद्वद्भ्यः रित्ति वेङ्कण्णाचार्येभ्यः

एवं अस्मत्सहोदरेभ्यः पं. राजा. श्री. लक्ष्मीनारायणाचार्येभ्यः, प्रियमित्रं पं. चीळ्ङ्गी लक्ष्मीनारायणमहाशयेभ्यश्च तेषामुपकारं संस्मृत्य कार्तज्ञं समर्पयामः।।

एवमेव विद्यामन्दिरस्य सुवर्णमहोत्सवस्मरणग्रन्थानां मुद्रणार्थं धनसाहाय्यमाचरितवद्भ्यः, ग्रन्थमुद्रणाय अक्षरसंयोजयितृभ्यः, ग्रन्थमुद्रकेभ्यः स्मरणसञ्चिकायाः प्रकटनाय धनसाहाय्यमाचरितवद्भ्यः, तथा ग्रन्थानां मुखपत्रचित्रणपूर्वकमुपकृतवद्भ्यः श्री आर. एस्. राघवेन्द्रमहोदयेभ्यश्च सन्त्वास्माकीनाः नैके सकार्तज्ञाः धन्यवादाः।

समारम्भत्रयमहोत्सवेऽस्मिन्नंशभाग्भ्यः सज्जनेभ्यः श्रीगुरुभक्त-धार्मिकेभ्यः श्रीहरिवायुगुरुसार्वभौमाः श्रीमत्सुयमीन्द्रतीर्थ-श्रीमत्सुजयीन्द्रतीर्थगुरुपादाश्च इतोप्यतिशयिदीर्घायुरारोग्यैश्वर्यादि-वाञ्छितार्थप्रदानपूर्वकं सकल-सन्मङ्गलान्यनुगृह्णन्त्वित्यभ्यर्थयामः।।

श्रीपरिमल
विद्यामन्दिरम्
नञ्जनगूड-बेंगलूरु.

इति श्रीगुरुपादकिंकराः,
प्रकाशकाः

# ३. प्रस्तावना

—श्रीमन्तो राजा श्री गुरुराजाचार्याः बेङ्गलूर

लक्ष्मीनारायणं वन्दे पूर्णप्रज्ञं जयाभिधम् ।
विजयीन्द्रसुधीन्द्रौ च राघवेन्द्रगुरूनपि ॥

राजाधिराजसंपूज्यं सर्वशास्त्रविशारदम् ।
सुमतीन्द्रयतीशानं वन्दे मत्कुलशेखरम् ॥

मन्त्रालयमुनीद्रान्तेवासिनं कृतिकारिणम् ।
सुयमीन्द्रं वरगुरुं सुजयीन्द्रञ्च नौम्यहम् ॥

महदिदं प्रमोदस्थानं नः यदद्य श्रीमद्विजयीन्द्रयतीन्द्रविरचिता 'वाग्वैखरीं' प्रकटीकृत्य विद्वद्वरेभ्य उपायनीक्रियत इति ।

वाग्वैखर्याः प्रकटनमङ्गलसुसन्दर्भे विपश्चिदपश्चिमानां तत्र भवतां महतां सविधे यत्किञ्चिन्निवेदयितुमीहामहे ॥

अयि महीमण्डलमण्डनायमानाः पण्डितपुण्डरीकाः, भगवद्भक्तिमञ्जरी-पिञ्जरितहृत्कुञ्जरञ्जितप्रभञ्जना निरञ्जनाः, नाज्ञातमिदमावेदनीयं यत्सर्वे जना आविपालगोपालं सुखमेवापेक्षन्ते न मनागपि दुःखसंस्पर्शम् । जननमरण-यातायातजन्यदुःखपरम्परापारावारनिपातिता बम्भ्रम्यमाणचित्ताः विषयविषमानलेन दन्दह्यमानकाया इतस्ततस्सञ्चलन्तोऽपि अलंबुद्धिमनासाद्य विक्षुब्धमानसा अलब्धशरणाः कान्दिशीकास्सुरनरतिर्यगादियोनिषु संसरन्ति सर्वे जन्तवः । तानुद्दिधीर्षुः भगवान्नारायणोऽरविदूरः परमकारुणिकः ब्रह्मादिनिलम्पगणैरभ्यर्थितः श्रीवेदव्यासरूपेणावतीर्य ज्ञानमुपदिदेशाधिकारिभ्यः निराकृतमनोविकारेभ्यः निस्सारितकामेभ्यः । तदाज्ञया परममङ्गला श्रुतिदेवी मातृवदव्याजप्रेम्णा दुःखनिवृत्त्यै परमसुखावाप्त्यै च उपायमायोजयामास ।

गौतममुनेश्शापात्कालवैक्लव्याच्च नष्टधर्मज्ञानान्साधूननुजिघृक्षुर्व्यासमुनिः श्रुत्यर्थनिर्णयाय ब्रह्मसूत्राणि चकार । तदुपबृंहणाय भागवतभारतादिपुराणेतिहास-जातं विरचय्य विज्ञानमणिमुद्द्योतयाम्बभूव । अज्ञानतिमिरतिरोहितं जगत्पतिं हृत्कुहरनिवासिनं रमारमणं चापरोक्षगोचरतामानिनाय । 'अम्बुवदग्रहणात्तु न तथा

त्वं', 'अतोऽनन्तेन तथाहि लिङ्गं' इत्युक्तदिशा निर्व्याजस्नेहार्द्रहृदयेन अणोरणीयसः महतोमहीयसः अचिन्त्यमहिम्नः नारायणस्य साक्षात्कारमन्तरा अज्ञाननिर्वृत्तिरिष्टावाप्तिश्च न सिध्यतः। तदज्ञाननिबन्धना दुःखपरम्परापि न लीयते। 'पुंस्त्वादिवत्सतः', 'तद्गुणसारत्वात्तु', इत्युक्तप्रकारेण स्वरूपतः ज्ञानानन्दात्मकोऽपि जीवः अनादिकामकर्मपाशप्रतिबद्धगतिः दुःखसंस्पर्शमनिशमनुभवति। कथं नु खलु अनाद्यज्ञाननिगडनिकर्तनेनाऽऽत्मानं मोचयितुं पारयेद्विलुप्तचेष्टः प्राकृतोऽयं वराको जनः? । राजदर्शनान्निगडबन्धनिवृत्तिमिव जगत्पतिं श्रीहरिमवलोक्यैव संसारनिगडविमोचनमुपकल्पयितुं प्रभवति जीवः महात्मनामुपदेशप्रकारैर्दर्शितपथः।

बहवो वादिनः बहोः कालान्नास्तिकदर्शनान्युद्भाव्य श्रीव्यासदेशिकोपदेशमावृत्य संशयाज्ञानविपरीतज्ञानानि प्रसारयामासुः। तदर्थमनुक्रोशयुक्तः भगवान्नारायणः दुर्ज्ञानमपसार्य सच्छास्त्रनिर्माणेन साधुजनानुद्धर्तुं, अपगतदोषसंस्पर्शमसंशयं संशयच्छिदं भुवनजीवनं मुख्यप्राणमादिदेश। अज्ञज्ञानार्थिज्ञानयोग्यभगवत्कृपापात्रभूतसल्लोककृपालुब्रह्मरुद्राद्यर्थितभगवदाज्ञां शिरसि परमादरेणानर्घ्यशिरोरत्नवन्निधाय, तथाशेषदेवताप्रार्थनां हारवद् हृदि निधाय सर्वस्वकीयसज्जनानुग्रहेच्छया श्रीपावनः पवमानः भारतभुवि श्रीमदानन्दतीर्थरूपेणावतीर्य श्रुतिस्मृतिपुराणेतिहासाद्यनन्तविद्याविवेचनेन प्रतिभातपरावरः मेघच्छन्नं रविमिव वायुः, दुश्शास्त्रतिरोहितप्रभावं नारायणं प्रदर्शयाम्बभूव साधुजननिकायाय। विज्ञान-शून्य-ब्रह्मैक्यवादाः शिवाद्यन्यदेवताप्रवादाः पाशुपताद्यागमाः समुत्पद्य अनौपधं क्षराक्षरोत्तमत्वं नारायणस्य वितथमकुर्वन्। तान्सर्वानन्यथाकृत्य अवितथमतं सत्सिद्धान्तमुद्घोषयामास वायुदेवः।

श्रीहरिः सर्वोत्तमः सर्वगुणपरिपूर्णः। ब्रह्मादिदेवताः तारतम्येन व्यवस्थिताः तदाज्ञापरिपालने गृहीतावताराः धर्ममार्गमुपदिश्य साधुजनानुद्धरन्ति। सर्ववेदान्तप्रत्ययन्यायेन श्रीहर्याराधनमङ्गाश्रितसर्वदेवतोपासनञ्च यथायथं भक्त्याऽनुष्ठेयम्। अनासक्तियोगेन फलाभिसन्धिं विना "अग्निहोत्रादि तु तत्कार्यायैव" इत्युक्तदिशा विहितकर्माण्यनुष्ठायापगतमलो ज्ञानचक्षुषा "पितरं पतिं गुरुतमं रमावल्लभं" हृदि साक्षात्कृत्य "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादि श्रुत्युक्तरीत्या अनिष्टमपहाय स्वरूपानन्दमनुभवति सात्त्विकचेतनः। अयमेव परमसिद्धान्तः प्रतिष्ठापितः श्रीव्यासानुमत्या वाय्ववतारभूतेन श्रीमन्मध्वाचार्येण। इममेव सिद्धान्तं श्रीमध्वशिष्यप्रशिष्याः जगति प्रथयामासुरसकृदुपदेशेन-ग्रन्थनिर्माणेन सत्पथ-प्रवर्तितमार्गेण। तेषु श्रीपद्मनाभतीर्थ-जयतीर्थ-कवीन्द्र-राजेन्द्र-विबुधेन्द्र-श्रीपादराज—व्यासयोगिनः, तदनु तत्प्रीतिपात्रभूताः विजयीन्द्र-वादिराज-सुधीन्द्र-राघवेंद्र-सुमतीन्द्रतीर्थगुरुचरणाः अङ्गुलीनिर्देशनेन गणनामर्हन्ति ॥

## द्वैतपीठपरम्परा

श्रीहंसनामकपरमात्मप्रवर्तित ज्ञानपीठाध्यक्षैः श्रीमन्मध्वाचार्यैः प्रवर्तिते परमपावने द्वैतसिद्धान्तसाम्राज्यसिंहासने श्रीमदाचार्यप्रधानशिष्याः श्रीपद्मनाभ-नरहरि-माधव-अक्षोभ्यतीर्थमुनीवराः क्रमशः व्यराजन्त। तदनु द्वैतभाष्यटीकाकाराः श्रीजयतीर्थसंयमीन्द्राः सर्वज्ञसिंहासनमलंचक्रुः। तदनु तदन्तेवासिनः श्रीविद्याधि-राजगुरुचरणाः द्वैतसाम्राज्यं सम्यक् परिपाल्य स्वनिर्याणकाले स्वशिष्यान् श्रीकवीन्द्र-श्रीराजेन्द्रतीर्थान् श्रीमदाचार्यविद्यासाम्राज्यपरिपालने नियोजयामासुः। षोडशतमे क्रिस्तशतके श्रीकवीन्द्रतीर्थपारम्पर्यां श्रीमत्सुरेन्द्रतीर्थश्रीपादाः, श्रीराजेन्द्रतीर्थपरम्परायां श्रीमद्व्यासराजतीर्थगुरुचरणाश्च श्रीमद्वैष्णवसिद्धान्त-प्रसरणमनवरतमाचरन्तः श्रीमध्वविद्यासाम्राज्यसिंहासने विलेसुः ॥

# ४. ग्रन्थकर्तृपरिचयः

ततो गच्छतिकाले, सकलकलाभिज्ञाः श्रीव्यासराजगुरुसार्वभौमाः न केवलं वेदान्तसाम्राज्यं अपितु विजयनगरसाम्राज्यं, 'राजगुरु'पदञ्च निर्वहन्तो व्यलसन्। कदाचिन्महामहिमशालिनः श्रीमध्वमहासंस्थानाधिपतयः मानसपूजाधुरन्धराः, सकलशास्त्रपारीणाः श्रीमूलरामार्चनोपार्जितविशिष्टवैभवाः श्रीसुरेन्द्रतीर्थश्रीचरणाः स्वपूर्वाश्रमबन्धून् सुहृन्मणीनिमान् श्रीव्यासराजयतिवरान् दिदृक्षवः विजयनगरं समीयुः। तदा स्वगुर्वाज्ञानुसारेण कृष्णदेवरायसार्वभौमः श्रीसुरेन्द्रमुनिपुङ्गवा-नसाधारणराजगौरवेण ससंभ्रममसेवत। श्रीसुरेन्द्रतीर्थाः श्रीव्यासतीर्थानां

बहुष्वन्तेवासिषु प्रचुरप्रभावशालिनं वर्चोविशेषविभूषितवपुषं तदर्थमेव गुरोर्लब्धतुरीयाश्रमं श्रीविष्णुतीर्थनामानं विष्णुभक्तप्रबर्हं सन्ददृशुः। एतेषां श्रीसुरेन्द्रतीर्थानां विषये भूयःप्रदर्शितस्नेहातिशयाः श्रीव्यासराजव्रतीन्द्राः स्ववयस्यानमूल्येन केनचित्पारितोषकेण सन्तोषयितुमभिलषन्तः तदर्थमेव परिपालितं स्वप्रीतिपात्रममुं श्रीविष्णुतीर्थं तेषां करे समर्प्यामन्दमानन्दमविन्दन् ।[१]

स्वीकृत्य च विष्णुतीर्थं श्रीसुरेन्द्रतीर्थाः तं दण्डपरिवर्तन-गुरूपदेश-मन्त्रमुद्राप्रदानपूर्वकं "श्रीविजयीन्द्रतीर्थ" इति नवेन नामधेयेन विभूष्य श्रीमदाचार्यपरम्परागतास्स्वकरार्च्यमानाः श्रीमूलराम-दिग्जियराम-जयरामादि-प्रतिमाः अप्रतिममहामन्त्रांश्चास्मै अनुगृह्य तं निजे श्रीमन्मध्ववेदान्तसाम्राज्य-महापीठेऽभ्यपिञ्चन् ।[२]

एष एव यतीन्द्रोऽस्माकमेतद्वचोविचारगोचरः वाग्वैखरीग्रन्थनिर्माता। श्रीविजयीन्द्रतीर्था इमे क्रिस्ताब्दीय १५३० तमवर्षमारभ्य १६१४ तम वर्षपर्यन्तं वेदान्तविद्यासाम्राज्यं सम्यक्परिपाल्य अनितरसाधारणकीर्तिविराजिताः लौकिकवैदिकविद्वन्मण्डलीलाल्यमाना विरेजिरे ॥

**वादिदिग्विजयः**

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां कालः क्रि. श. १५१७ तमवत्सरमारभ्य १६१४ तमवत्सरपर्यन्तमिति बहूनामैतिहासिकविमर्शकानां विवादविवर्जितो

---

१. विष्णुतीर्थकरं तस्य सुरेन्द्रस्य करे ददौ ।
ददामि मत्सुतं तुभ्यं स्वीकुरुष्व यतिव्रत ।
परिपालय हंसेमं (त्वं हंस) त्वदर्थं स्थापितं मया ।
शिष्येष्वेषु तु सर्वेपु नानेन सदृश्यो मम ॥
इत्युक्त्वा प्रददौ व्यासः सुरेंद्राय सुतं मुदा । —श्रीविजयीन्द्रविजयः ।

२. गृहीत्वा तं मुनिं हंसो विष्णुतीर्थं सुरेन्द्रकः ।
सुरेन्द्रस्तस्य प्रददौ भिक्षोर्दण्डकमण्डलुम् ।
दत्वा श्रीमूलरामार्चां विद्याराज्येऽभिषिच्य तम् ।
मन्त्रं दत्वा स्ववंशस्य कर्तारं कृतवान्मुनिः ।
अथासौ विष्णुतीर्थश्च विजयीन्द्र इति श्रुतः ॥ –श्रीविजयीन्द्रविजयः ।

निर्णयः । इमे १५३५ तमवर्षपर्यन्तं श्री व्यासराजतीर्थानां निकट एव कृतवसतयः समग्रशास्त्राणि चतुःषष्टिकलाश्च साकल्येन संजगृहुः ।[३]

श्रीविजयीन्द्रपूज्यपादाः निजायुषः भूयांसं भागं निरवद्यविद्यैकसद्मायमाने कुम्भघोणाभिधाने नगरवर एवानैषुः। तत्र च स्वीयविद्यावैभवेन सर्वानपि वैदिकमतानुयायिनः पण्डितान्भूसुरांश्च विजित्य तान्सर्वान् शैवान् कुर्वन्तं शैवसंन्यासिनं (वीरशैवमठाधिपम्) पणबन्धपूर्वकं स्ववाग्वैखरीभरेण पराजित्य स्वायत्तीकृत तत् सर्वस्वाः व्यराजन्त ॥[४]

विजयाभिवृद्धिदत्तचित्तैः श्रीविजयीन्द्रपूज्यपादैः तदा तदा विजयनगरादि विविधनगरीषु दिग्विजययात्राऽकारि। तत्रत्याः विपश्चिदपश्चिमाः प्रतिवादिनो निश्शेषमजेजीयन्त ।[५]

ततश्च तत्रत्यैस्तदानीन्तनैरवनीश्वरैरनितरसुलभबहुमानवितरणपुरस्सरमेते आद्रियन्ते स्म ॥

एवं चतुःषष्टिकलाकलापकौशलेन वादविद्यावैभवेन सर्वतन्त्रस्वातन्त्र्येण च विलसतां श्रीविजयीन्द्रगुरुसार्वभौमानां कीर्तिरासेतुहिमालयं सर्वा आशा अवरुध्य

---

३. षड्वारं व्यासराजेन्द्रमुखाच्छ्रुत्वा विशेषतः ।
मध्वशास्त्रार्थसारं तु व्याचक्षाणं निजान्प्रति ।
नवकृत्वो न्यायसुधां व्यासतीर्थपयोनिधेः ।
उद्धृत्य पीतवंतं च नाकीन्द्रमिव सन्नुतम् ॥ — विजयीन्द्रस्तोत्रम्

४. (क)– जित्वावादे वीरशैवगुरुं विस्तृततन्मठम् ।
अपहृत्येह संवासं कृतवन्तं सतां हितम् । — स्तोत्रमहोदधिः पृ-२९२.

(ख)– Aravidu Dynasty of Vijayanagaram – p. 552.

(ग)– Epigraphica Indica – Vol. xiii. p. 346.

(घ)– Mysore Arch-Report-1944. p. 103. Inscription No. 25.

५. चचार पृथिवीं सर्वां सिंहः क्षुद्रमृगेष्विव ।
शास्त्रज्ञा मूकतां प्राप्ताः जयीन्द्रपुरतस्तदा ॥
ब्राह्मणानजयत्सर्वांस्तर्कमीमांसवादकान् ।
दैवज्ञान्भिषजो भट्टान्मायिनश्शास्त्रपारगान् ।
ये ये जना वेद्यविद्यास्ते ते तेन विनिर्जिताः ।
सर्वान्विजित्य सर्वत्र चचार पवनो यथा ॥ — विजयीन्द्रविजयः ।

विरेजे। तदा तदाकृष्टहृदयास्सहृदयाः बहवः शास्त्रितल्लजाः, कविपुङ्गवाः, शैवाद्वैतादिपरराद्धान्तविदग्धाः तद्दर्शनाय परीक्षणाय, पराजयाय चाहमहमिकयाऽभ्यधावन्। तेषु प्रधानतया गण्यन्ते श्रीमदप्पय्य दीक्षितेन्द्र—ताताचार्य—भट्टोजीदीक्षिताः। भट्टोजीदीक्षाः एतेषां व्याकंरणशास्त्रनैपुण्यमुपवर्ण्यागण्यमानन्दमभजन्। ताताचार्या एतेषां सुहृद एवावर्तन्त। अन्ये वेदान्तिनो व्रीडाधरितमुखाः पलायन्त। तदीयकवितामाधुरीधुरीणाः गीर्वाणगिरोऽवधार्य कविमणयः तदैव स्वाभिमानं तत्यजुः॥

तर्कविदग्धास्तदीयवादवातोपसेवितेन तर्कतीव्रानलेन विशेषतो दग्धा एव। का कथान्येषां तदानीन्तनानां पण्डितंमन्यानाम्? असकृदधरीकृतचातुरीका अप्पय्यदीक्षिता "जयीन्द्रयोगिरूपतोवतीर्ण एष पूर्णधी"रिति विजयीन्द्रान्स्तुवन्तः एतेषां सुहृद एवावर्तन्त। तत्कृतानां द्वैतराद्धान्तविरोधिनां प्रबन्धानां खण्डनाय एतेऽपि चतुरधिकशतप्रबन्धप्रवरारीरचन्।[१]

किञ्च इमे न केवलं सर्वशास्त्रविशारदाः अपितु सङ्गीतशिल्पादि चतुःषष्टिकलास्वपि कुशलतरा व्यलसन्।[२]

एवं सकलंकलाकोविदानखिलान्प्रत्यर्थिपण्डितान् विजित्य श्रीविजयीन्द्रयतिशेखरा अनितरसाधारणीं कीर्तिं अलभन्त।

**राजसम्मानम्**

श्रीमद्विजयीन्द्रयतीन्द्राणां सर्वतन्त्रस्वातन्त्र्यं, सिद्धान्तस्थापनविचक्षणतां, वादकौशलं, ग्रन्थप्रणयनचातुरीं ज्ञान-भक्ति-वैराग्य-तपो-महिमादिकं समवलोक्य

---

१. क:- दुर्वाद्यपय्यरचितग्रन्थारण्यविनष्टये।
चतुस्संख्याधिकशतग्रन्थादीनां प्रचोदकम्। —विजयीन्द्रस्तोत्रम्।

ख:- विजयीन्द्रकृतैर्ग्रन्थैस्तद्ग्रन्थास्ते निराकृताः॥ —विजयीन्द्रविजयः।

२. क:- स्फुटविदितचतुःषष्टिविद्याविशेषः॥ —गुरुगुणस्तवनम्।

ख:- चतुःषष्टिकलाविद्याजुषे विद्वन्महोमुषे।
जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोजुषे॥ —श्रीराघवेन्द्रविजयकाव्यम्।

ग:- चतुःषष्टिकलाविद्यापूर्णोऽयमिति बन्दिभिः।
राजमार्गे घोष्यमाणं श्रीमध्वमतवर्धनम्॥ —विजयीन्द्रस्तोत्रम्।

प्रहृष्टान्तरङ्गास्तदानीन्तना नैके अवनीश्वरा विजयीन्द्रगुरुचरणानिमान् "रत्नाभिषेक-कनकाभिषेक-ग्राम-भू-धनकनकरत्नाभरणसमर्पणपूर्वकं सभक्तिश्रद्धं संसेव्य तदनुग्रहभाजनान्यभूवन्। तेष्विमे प्रधानतया गण्यन्ते ॥

१. कर्नाटकसाम्राज्याधीशः कृष्णदेवरायः स्वगुरुप्रियशिष्यान्विजयीन्द्र-गुरुचरणान् क्रि. श. १५३० तमे वत्सरे ग्राम-भू-कनक-वस्त्राभरणादिभिः सभक्तिप्रकर्षमसेवत।

२. विजयनगरीयसाम्राज्यधुरन्धरः "अळिय" रामराज महीपालः स्वगुरूनिमान् स्वर्णपीठे प्रतिष्ठाप्य अनितरसाधारण "रत्नाभिषेक" गौरवेणासेवत[३] ॥

३. तञ्जापुरीय युवराजः अच्युतप्पनायकः सुभिक्षं सम्पद्भरितं "अच्युतप्पसमुद्रा"भिधं ग्राममेकं सरत्नाभरणं समर्प्यानन्दमभजत।[४]

४. तञ्जापुरराज्यपालः शिवप्प(चव्वप्प)नायकः श्रीविजयीन्द्रगुरुपादेभ्यः सगौरवं ग्रामचतुष्टयप्रदानपूर्वकं संसेव्य आत्मानं कृतार्थं अमनुत।[५]

५. कर्नाटक चक्रेश्वरः "इम्मडी" श्रीरङ्गराजमहीपतिः क्रि. श. १५७६ तमे संवत्सरे "अरविलिमङ्गलाख्यं" ग्राममेकं सहिरण्योदकधारापूर्वकं समर्प्य गुरुवरानिमानसेवत ॥[६]

---

३. (i)- विद्वद्वरोऽस्माद्विजयीन्द्रयोगी विद्यासुहृद्यास्वतुलप्रभावः।
रत्नाभिषेकं किल रामराजात्प्राप्याग्र्यलक्ष्मीनकृताग्रहारान् ॥

श्रीराघवेन्द्रविजयः।

(ii)- Epigraphica India.

(iii)- Aravidu Dynasity of Vijayanagaram.

(iv)- Sources of Vijiayanagaram Hystory.

4. (i)- Epigraphica India vol : xiii.

(ii)- Mysore Arch-Report-1947.

5. (i)- Epigraphica India vol : xii.

(ii)- Mysore Arch-Report 1944. inscription No. 26. p 113.

6. (i)- Epigraphica India - vol : xii. 1943–44p. 358.

(ii)- Aravidu Dynasity of Vijayanagaram. 287.

६. श्रीशालिवाहन शके १५३६ तमे आनन्दनाम संवत्सरे चैत्र शुक्ल ९ सौम्यवासरे (Date- ९.३.१९१४) तञ्जापुरराज्यनिर्वाहकः चिन्न चव्वप्प महीपालः भूम्यारामकनकाभरणादिप्रदानपुरस्सरं श्रीविजयीन्द्रतीर्थान् संसेवयामास ॥[७]

एवं मधुराधीश विश्वनाथनायक-उदयमार्ताण्डवर्म-रघुनाथभूपाल-सूरप्पनायक-वेंकटप्पनायक-देवराज-नञ्जराज- इम्मडी रामराजनायकप्रमुखा नैके महीपतयः विजयीन्द्रयतीश्वरान् सपरमादरभक्तिप्रकर्षमसेवन्त इत्यलं पल्लवितेन ॥

**ग्रन्थरचना**

श्रीविजयीन्द्रगुरुपादा इमे वेदान्त-पातञ्जल-गौतमीय-जैमिनीयशास्त्रेषु, वेदवेदाङ्गेषु काव्य-नाटकालङ्कारादिसाहित्यशास्त्रेषु च शताधिकप्रबन्धप्रवरान्विरचय्य आविपालगोपालैर्विविधदेशीयैर्विबुधवरेण्यैश्च संस्तूयमाना भारतभूमिं पवित्रीकुर्वन्तः षोडशतमे शतके भृशं शुशुभिरे ।

गुरुवराणाममीषां ग्रन्थप्रणयनचातुरीं श्रीराघवेन्द्रविजयकारा एवमुपवर्णयन्ति—

"वाक्ये पदे पादविलोचनोक्तौ
व्यासीयशास्त्रे च कृतान्प्रबन्धान् ।
आस्तां बुधाः श्रोतुमशेषमेषा-
माख्यास्समाख्याद्यदि पण्डितोऽसौ ॥"

श्रीवादीन्द्रतीर्थश्रीपादास्तु स्वीयगुरुगुणस्तवनाख्ये काव्ये श्रीविजयीन्द्रयोगिनां वैविध्यपूर्णव्यक्तित्वमेवमुपवर्णयन्ति ।

"चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रन्थरत्नप्रणेता
धूतारातिप्रबन्धः स्फुटविदितचतुःषष्टिविद्याविशेषः ।
सोऽयं नः श्रीसुरेन्द्रव्रतिपतितनयोऽद्वैतशैवासहिष्णुः
पुष्णातु श्रीजयीन्द्रस्त्रिभुवनविदितस्सर्वतन्त्रस्वतन्त्रः ॥"

---

७. क) Mysore Arch. Report–1944 p. 121. Inscription No. 27
ख) Mysore Arch. Report– 1944 p. 121. Inscription No. 28

श्रीसुमतीन्द्रतीर्थपादा विजयीन्द्रगुरुपादानेवं स्तुवन्ति—

"स्तौमि श्रीविजयीन्द्रसंयमिमणे प्रौढिं तवाढौकित-
प्रज्ञागन्धवहप्रभञ्जनभरोदर्कैकभास्वद्धुराम् ।
यामि स्फूर्तिमिह व्रजत्यभिदधत्यानन्दमाच्छादय-
त्याशाचक्रमहो विभाति रुचिराकारा चिरं द्योतते ॥"

एतादृशमहिमशालिभिः श्रीमद्विजयीन्द्रतीर्थपूज्यपादैर्विरचितेषु भारतीयवैदिकवाङ्मयभण्डारालङ्कारभूतेषु शताधिक प्रौढप्रबन्धेषु नैके लुप्ताः, अन्ये अन्धकारकोणके तत्र तत्र निलीनाः धूलीधूसरिताङ्गाः, कीटनाशितमातृकाः प्राप्तात्यन्तदुरवस्थाः एतावता कालेनाप्यप्रकाशिताः अलक्षितरूपा वर्तन्त इत्यहो दौर्भाग्यं भारतीयानाम् ।

परं श्रीमद्गुरुकारुण्यसरणिं प्रपन्नानामस्माकीनसौभाग्येन, श्रीमन्मध्वविद्यासिंहासनाधीश्वराणां श्रीमद्राघवेन्द्रगुरुसार्वभौममठाधीशानां कीर्तिशेषाणां परमपूज्यगुरुवराणां श्रीमत्सुयमीन्द्रतीर्थश्रीमच्चरणानां सकालिकोपदेशादेशाशीर्वादबलेनास्माभिः संगृहीतसहस्राधिकप्राचीनग्रन्थेषु श्रीविजयीन्द्रविरचिताः षष्ठ्यधिकग्रन्था उपलब्धाः ।*

अन्यत्र प्राचीनग्रन्थभाण्डागारेषु त्रिंशदधिकप्रबन्धा उपलभ्यन्ते । आहत्याद्य श्रीमद्विजयीन्द्रगुरुपादविरचिता नवत्यधिकग्रन्थप्रवरा उपलभ्यन्त इति निवेदयितुं मोमुदीत्यस्माकं चेतः ॥

**अवतारपरिसमाप्तिः**

श्रीविजयीन्द्रतीर्था इमे आसेतुहिमाचलं सुक्षेत्राण्याटित्वाऽन्ते कुम्भघोणक्षेत्रमासाद्य तत्र सुप्रसिद्धं संस्कृतविद्यापीठं संस्थाप्य तत्र न्यायवेदान्तादि

---

* अस्माभिस्संग्रहीतेषु गन्थेषु "१.ब्रह्मसूत्रन्यायसंग्रहः,२.शैवसर्वस्वखण्डनम्, ३.भेदविद्याविलासः,४.उपसंहारविजयः,५.परतत्वप्रकाशिका" इति पञ्चप्रबन्धाः अस्माभिः पूर्वमेव प्रकटीकृताः । अधुना "तुरीयशिवखण्डनाभिधं" प्रबन्धं मुद्रणाय सज्जीकृतमिति सहर्षं निवेदयामः ॥

सकलशास्त्रपाठप्रवचनप्रसारणादि स्वाश्रमोचितधर्मकर्माचरणपुरस्सरं महान्तं कालं नयन्तः स्ववासेन सह्यजातीरस्याप्यपारं पावित्र्यमासादयामासुः ।

एवं साधुजनसमूहसेविताः विज्ञगणवादतोषिताः भूमिपतिभिरादृताः शरणीकृतस्वचरणानां शिष्यभक्तजनानामनिष्टनिवृत्तिमभीष्टसमृद्धिञ्च सानुकम्पमनुगृह्णन्तः सप्तनवतिवर्षाणि भारतवर्षं पर्यभूषयन् । अन्ते पूर्वमेव स्वगुरुभ्यः श्रीसुरेन्द्रतीर्थपूज्यपादेभ्यस्स्वीकृतवराश्रमान्, स्वशिष्यान् षड्दर्शनाचार्यान् कविसार्वभौमान् श्रीमत्सुधीन्द्रतीर्थश्रीपादान् स्वीयवेदान्तसाम्राज्यसिंहासने प्रतिष्ठाप्य श्री शालिवाहन शके १५३६ तमे श्रीमदानन्दनामसंवत्सरे ज्येष्ठ कृष्ण त्रंयोदश्यां स्थिरवासरे (क्रि. श. १६१४) कुम्भकोण नगर एव कवेरकन्यकाधन्यंपयः पवित्रिते तटिनीतटे श्रीमन्नारायणध्यानपरायणाः स्वावतारपरिसमाप्तिमकुर्वन् इति निवेद्य कृतिनायकपरिचयमुपसंहरामः ॥

**भक्तानां मानसाम्भोजभानवे कामधेनवे ।**
**नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥**

**भ्राम्यन्तो बहुधोपपत्युरुधुरोद्भाविस्वभावा बुधाः**
**ब्रूध्वं माध्वमतोपगम्भपटुभोन्मेषो वचो विभ्रमैः ।**
**भव्यः कोऽपि गुरुर्भवेद्भुवि पुरोभावी नु भूतो भवन्**
**भो विद्योपपदोपशोभिविभवात्पत्यु प्रभूतोपमः ॥**

# ५. ग्रन्थसंग्रह-संशोधनम्

वयमिदानीं वाग्वैखरीग्रन्थसङ्ग्रह-संशोधनविषये किञ्चिन्निवेदयितुमीहामहे । द्वैतसिद्धान्तोपरि श्रीमद्विजयीन्द्र-सुधीन्द्र-राघवेन्द्र-सुमतीन्द्र-वादीन्द्र-धीरेन्द्र -भुवनेन्द्र-व्यासतत्वज्ञतीर्थप्रमुखज्ञानिनायकैः द्वैतसिद्धान्तोपासकैरितरज्ञानिवर्यैश्च विरचितान्यप्रकाशितानि शताधिकग्रन्थरत्नानि श्रीराघवेन्द्रगुरुसार्वभौमानां पूर्वाश्रमवंशीयानां गृहेषु तत्कालमारभ्य संरक्षितानि विलसन्तीति विदितचरमेव विबुधवराणाम् । क्रि. श. १९४५ तमे वर्षे श्रीराघवेन्द्रगुरुवराणामुभयवंशाब्धिचन्द्राणां परमपूज्यानामस्मत्परिमलविद्यामन्दिरस्थापकानां

कीर्तिशेषाणां श्री १००८ श्रीसुयमीन्द्रतीर्थश्रीपादानामाज्ञानुसारेण "श्रीपरिमल-संशोधनप्रकाशनमन्दिर"स्थापनपूर्वकं प्राचीनग्रन्थसंग्रहकार्ये प्रवृत्तानामस्माकं श्रीसुयमीन्द्रतीर्थानां पूर्वाश्रमीयपुत्रैरस्मज्ज्येष्ठभ्रातृभिश्श्रीमद्भिः पं. राजा श्री वेणुगोपालाचार्यैः, तथाऽस्मत्पितृव्यैः पं. रा. जयरामाचार्यैः, श्रीगुरुवंशजातैः श्री जि. पुरुषोत्तमाचार्य, पं. सेतुमाधवाचार्यप्रमुखैश्च स्वगृहस्थानि शताधिकानि ग्रन्थरत्नान्यस्मद्विद्यामन्दिराय सानुग्रहं प्रदत्तानीति विदितमेव समेषां सज्जनानाम् ।

एवमस्माभिस्संग्रहीतेषु ग्रन्थेषु वाग्वैखर्याः हस्तलिखितं ग्रन्थद्वय-मुपलब्धम् ।

अस्माभिरिदानीमधोनिर्दिष्टग्रन्थद्वयसाहाय्येन ग्रन्थसंशोधनमकारि ॥

**ग्रन्थमातृकाः**

१.मूलम्:— हस्तलिखितम्— श्री पं. राजा वेणुगोपालाचार्यैः प्रदत्तम् ।

२.हस्तलिखितम्— श्री पं. रा. जयरामाचार्यैः प्रदत्तम् ।

**संशोधनम्**

बेङ्गळूरु श्रीचामराजेन्द्रसंस्कृतकलाशालायाः विश्रांतन्यायवेदान्तप्राध्यापकाः न्याय-वेदान्त-साहित्यशास्त्रविद्वांसः, "विद्याविभूषणम्" इत्यादिबिरुदभाजः अस्मत्प्रियसुहृदः प्रो. साणूरु भीमभट्ट, एम्. ए. महोदयाः ग्रन्थस्यास्य संशोधनकार्यभारं निर्वाह्य सक्रियसाहाय्यमाचरय्यास्मासु महान्तमुपकारमकुर्वन् । न केवलं संशोधनसाहाय्यमपि तु दिवा नक्तं बहुपरिश्रमेण मुद्रणयोग्यहस्तप्रतिग्रन्थं स्वयं विलिख्य श्रीमद्विजयीन्द्रतीर्थगुरुपुङ्गवानामनितरसाधारणसेवां विधाय गुरुपादानां विशेषानुग्रहभागिनोऽभवन्निति सज्जनेषु निवेदयितुं सन्तोतुष्यामहे ।

**धन्यवादसमर्पणम्**

एतद्ग्रन्थसंशोधनकार्ये स्वकीयं सर्वं कार्यमुपेक्ष्यापि महत्साहाय्य-माचरितवद्भ्यः प्रो. साणूरु भीमभट्टेभ्यः अस्मत्कृतज्ञतापूर्वकान् प्रणामान् समर्पयामः ।

एवं ग्रन्थममुं पठ्यपुस्तकत्वेन व्यवस्थाप्य षट्शातग्रन्थान् स्वीकृत्य महान्तमुपकारमाचरितवद्भ्यः तत्रभवद्भ्यः श्रीपादपुत्रेभ्यः श्री राजा कृष्णाचार्य श्री राजा सुज्ञानेन्द्राचार्येभ्यस्सन्त्वास्माकीनाः परस्सहस्रा साशीर्वादसहकृता धन्यवादाः ।

बहुकालानन्तरमपि "वाग्वैखरीं" मुद्राप्य सहृदयेभ्यः पण्डितप्रवरेभ्यः उपायनीकर्तुं महानानन्दस्सञ्जायते । यथायोग्यं सम्पाद्य विबुधलोकाय प्रदत्तामिमां वाग्वैखरीं पाठप्रवचनेन पंडितप्रवराः प्रसारं कुर्वन्ति चेत्तदास्मच्छ्रमस्सर्वोऽपि सार्थको भूयात् । श्रीमद्विजयीन्द्र-राघवेन्द्र-सुयमीन्द्रतीर्थगुरुचरणाः कृतेरस्याः पाठप्रवचननिरतेभ्यः विद्वद्भ्यः ज्ञानभक्त्यायुरारोग्यसन्मङ्गलादिप्रदानेनानुगृह्णन्त्वित्यभ्यर्थ्य विरमाम इति शम् ॥

युव संवत्सर, आश्विन शुक्ल १५
८-१०-१९९५
श्रीपरिमलविद्यामन्दिरम्,
नञ्जनगूडु—बेङ्गळूरू

सुधीजनवशंवदाः
सम्पादकाः
**राजा श्री गुरुराजाचार्याः**
**प्रो. साणूरु भीमभट्टमहोदयाश्च**

# ६. धन्यवादसमर्पणम्

श्रीमच्छाष्टिकवंशालङ्कराणां, पेनगोण्डे धर्मश्री नरसम्मतनूभवानां मुदगल् श्री लक्ष्मीनरसप्प महोदयानां, तथा दोड्डबल्लापुर सोवेनहळ्ळी श्री सूरप्प-पुट्टम्मकुमारी धर्मश्री सेतूबायिनाम्न्याः सत्पुत्राः, श्रीमद्धरि-वायु-राघवेन्द्रगुरुसार्वभौमाना-मन्तरङ्गभक्ताः, षाष्टिकवंशभूषणाः, सत्कर्माचरणधुरीणाः, सदाचारसम्पन्नाः, तत्त्व-धर्मप्रसरणासक्ताः, विद्यापक्षपातिनः, धर्मकार्यसहायकाः श्री के. प्राणेशराय महोदयाः तथा तदनुजाश्च दिवंगतानां स्वीयमातापितृणां सेतूबायि श्रीलक्ष्मीनरसप्पमहोदयानां संस्मरणार्थं ग्रन्थस्यास्य मुद्रणाय धनप्रदानेन महान्तमुपकारमकुर्वन् ।

एतद्ग्रन्थप्रकाशनसाहायकेभ्यः श्रीमद्भ्यः के. प्राणेशराय महोदयेभ्यः, तथा तदनुजेभ्यश्च आस्मीकीनकृतज्ञतापूर्वकधन्यवादान् समर्प्य तेभ्यः श्रीमद्भ्यः ज्ञानभक्त्यायुरारोग्यसत्सन्तानाभिवृद्धिपूर्वकं सकलसन्मङ्गलान्यनुगृण्हन्त्विति श्रीहरिवायुगुरुसार्वभौमानभ्यर्थयामः ।

राजा श्री गुरुराजाचार्यः
राजा श्री लक्ष्मीनारायणाचार्यः

## ७. ग्रन्थपरिचयः

# वाग्वैखरीवैखरी

**भक्तानां मानसाम्भोजभानवे कामधेनवे ।**
**नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥**

अथातः प्रस्तूयते श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचितः वाग्वैखरीनामकः प्रकरणग्रन्थः ।

प्रत्यहं प्रायः सर्वमाध्ववैष्णवेन प्रातः सश्रद्धं पठ्यमाने श्रीगुरुस्तोत्रे यस्य महिमा एवमुद्घोष्यते 'वाग्वैखरीनिर्जितभव्यशेषः' इति ।

**निरस्तदोषो निरवद्यवेषः प्रत्यर्थिमूकत्वनिदानभाषः ।**
**विद्वत्परिज्ञेयमहाविशेषो वाग्वैखरीनिर्जितभव्यशेषः ॥**

अयं श्रीराघवेन्द्रगुरुवर्णनपरः श्लोकः तत्परमगुरुषु विजयीन्द्रतीर्थ-श्रीपादेष्वपि, समन्वितो भवति ध्वनिमर्यादया तत्प्रतीकरूपेऽस्मिंस्तदीयग्रन्थेऽपि संगच्छते ।

**श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः**

इत्येवं मंगलाशासनेनारब्धोऽयं ग्रन्थः "सेवे श्रीनृहरिं मुदे" इति तदीयद्वितीयश्लोकान्तिमचरणोक्तमंशं प्रतिगृह्य "ननु कथं मुदे त्वं तं नृहरिं सेवसे । लोके प्रेक्षावन्तस्तमेव सेवन्ते यः कल्याणगुणशालितया प्रमाणेन निश्चितः । न हि त्वं तथात्वेन नृसिंहं केनापि प्रमाणेन निश्चिनोषि । लोके हि लक्षणप्रमाणाभ्यां हि पदार्थानां स्वरूपावधारणं कुर्वन्तो दृश्यन्ते ।" इत्येवंरीत्या भगवद्विषये प्रमाणाक्षेपपुरस्सरं प्रवर्तते । हिरण्यकशिपुना स्वतनूजं कायाधवं प्रति "क्वासौ ते जगदीश्वरः" इत्येवं कृतमाक्षेपं वचनवैखरीयं स्मारयति । तत्र यथा प्रह्लादप्रार्थनानुसारेण नृसिंहः प्रादुर्बभूव तथास्मिन् वाग्वैखरीग्रन्थेऽपि नृसिंहं प्रादुर्भावयामासुः श्रीविजयीन्द्रगुरुपादाः स्ववाग्वैखरीद्वारा ।

ततो भगवति अपौरुषेयत्वेन भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषलेश-शून्यः वेद एव प्रमाणमिति निरूप्य वेदे तत्त्वावेदकातत्त्वावेदकभागद्वयं प्रकल्पयतां

जल्पनं निराकृत्य कर्मकाण्डादीनां सर्वेषामपि तत्त्वावेदकत्वेनैव प्रामाण्यमिति जैमिनीयशास्त्रसंमतिं प्रदर्श्य निर्धारयांचक्रुः । परब्रह्मणः दिव्यं शरीरमस्ति, ब्रह्मणो गुणाः तत्स्वरूपभूताः न मिथ्या, वेद एव नृहरिविष्यकप्रमाजननसमर्थः वेदानां तत्त्वमस्यादीनां ब्रह्मणि लक्षणाङ्गीकारः नोपपद्यते इत्येवं समर्थनपूर्वकं प्रतिवादिमुखाम्बुजमुद्रणचणैश्चन्द्रिकाप्रसरसदृक्षैः वाग्वैखरीमयूखैर्विजयीन्द्रचन्द्राः व्यजृम्भन्त ।

'तत्त्वमसि'वाक्यार्थविचारं बहुदूरप्रसारिभिः स्वकीयगोत्रजैर्लम्बयित्वा, खण्डयित्वा ततःपरम्— एकमेवाद्वितीयम्, नेह नानास्ति किंचन, यत्र त्वस्य सर्वमात्मैवाभूत्, वाचारम्भणं विकारो नामधेयम्, प्रपंचो यदि विद्येत, इन्द्रो मायाभिः पुरुरूप ईयते यस्मात् परं नापरमस्ति किंचित् इत्यादिश्रुतीनां प्रपंचमिथ्यात्वासाधकत्वं जीवेश्वराभेदे सर्वथाऽनुपयोगं च प्रसाधयामासुः ।

अत्र हि ग्रन्थे प्रायः मायावादिभिरङ्गीकृतं भाट्टनयं पुरस्कृत्यैव तत्प्रदर्शितेनैव पथा विषयविचारः सर्वत्रापि प्रस्तुतः ।

एवं श्रुतिस्मृतियुक्तिविरुद्धत्वेऽपि स्वकीयकपोलकल्पितसिद्धान्ताग्रहं कुतः प्रतिवादिनो न विजहति? इति न जानीमः इत्येवमनेकेषु स्थलेषु सौजन्यपूर्वया शैल्या वदन्त एते ग्रन्थकाराः प्रतिमल्लपराजयेऽपि स नावमाननीय इति महतामादर्शमार्गं बहुधा प्रदर्शयन्ति ।

अत्रानेके मीमांसान्यायाः व्याकरणविचाराः न्यायशास्त्रपद्धतयः परिशीलिताः, येषां पुनःपुनरालोडनेन निर्मत्सराणां सतां मनस्येवं प्रतिभाति यदिमे समस्तशास्त्रनदीष्णाः निष्पक्षपाताः विमर्शकधौरेयाः, स्वयमिदमित्थमेवेति-न्यायनिर्णयोल्लेखनसमर्था अपि करुणया प्रतिवादिनामन्तस्साक्षिणमुद्बोध्य तैरेव स्वयं निर्णयः श्रीपादैरादर्शित अस्माभिरङ्गीक्रियते — वयं पराजिताः इति समुद्घोष्यतामित्याशेरते इति सहृदयानां पण्डितवरेण्यानां मनसि प्रतिभाति ।

आदौ अन्ते च महामनीषिधौरेयाणां पंडितपुंडरीकचक्रवर्तिपंचानननाना-मेतेषामुद्घोषरूपं पद्यमिदं शोश्रूयताम्, पापठ्यताम् यथा—

**ये नित्यं पदवाक्यमानसरणीसंशीलनालंकृताः**
**तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।**

**या चानेकविनेयषट्पदततेः संफुल्लमल्लीसमा**
**सैषा श्रीविजयीन्द्रसंयमिमणेर्वाग्वैखरी सेव्यताम् ॥ इति ॥**

तस्यास्यामूल्यग्रन्थरत्नस्य प्रकाशकाः श्रीराघवेन्द्रस्वामिनां पूर्वाश्रमवंशोद्भवाः कवितिलकेत्याद्यनेकबिरुदांकिताः राजा एस्. गुरुराजाचार्याः परस्सहस्रवारमभिवन्दनार्हाः, अभिनन्दनार्हाश्च, येषां परिश्रमं विना कुत्रापि अन्धकारिकोणे निलीनः नायं ग्रन्थः प्रकाशपदवीमासादयति स्म । तैर्दत्तं समग्रं मातृकापुस्तकमेकम्, अन्यच्च कतिपयपत्रात्मकं पुस्तकं परिशील्य प्रथमतः प्रतिकृतिरकारि । अत्र पुनरन्यदेकं निवेदनीयं यत् श्रीपादपुत्रैः पंडितकेसरीत्यादिबिरुदांकितैः राजा एस्. गिर्याचार्यैः, स्वपुत्रराजा एस्. पवमानाचार्यद्वारा मातृकापुस्तकमेकं प्रदापितम् यस्य साहाय्यमस्माभिः प्रतिलिपिकरणे महदासादितम् । तेभ्यो वयं परश्शतानि कृतज्ञतावचनानि समर्पयामः ।

मातृकाग्रन्थेषु क्वचित् पंक्तिलोपः क्वचित् अक्षरलोपः अक्षरस्खालित्यम् इत्यादयस्त्रुटय प्रतिलेखकप्रमादजनिता आसन् । तथापि यथामति तस्य शोधने कृतेऽपि द्वित्रस्थलेषु समीचीनपाठयोजनं कर्तुं न पारितम्, तत्र रिक्तं स्थलं तथैव स्थापितम् ।

महानयं कार्यभारः न मादृशेनाल्पधिषणेन निर्दोषतया साधयितुं शक्यः, परं तु श्रीविजयीन्द्रतीर्थगुरूणां, श्रीराघवेन्द्रतीर्थगुरूणां चानुग्रहलेशेन कार्यमिदं समाप्तिमगमत् । अत्रोर्वरिताः न्यूनताः समासूचयन्तु पण्डिताः ग्रन्थस्यास्य मूलप्रतीकं स्वसमीपे विद्यमानं दत्वा पुनरधिकसंशोधने साहाय्यमारचयन्तु । सर्वेऽपि सज्जनबन्धवः पण्डिताः ग्रन्थस्यास्य पठनेन हरिगुर्वनुग्रहभाजो भवन्तु ।

**क्वाहं मन्दमतिः क्वायं सुवादग्रन्थतल्लजः ।**
**हरेर्गुरोर्दयामात्रातीर्णः कार्याम्बुधेरहम् ॥**

बेंगलूरु, २९-८-१९९५
युवसंवत्सरीय
विश्वंभरविनायकमहोत्सवः
कलिवर्षाणि ५०९७

एवमाशासिता
**विद्वान् साणूरु भीमभट्टः**
निवृत्त तर्कशास्त्राध्यापकः
श्रीचामराजेन्द्रसंस्कृतमहापाठशाला,
बेंगलूरु

# ८. श्रीमद्विजयीन्द्रतीर्थप्रणीत वाग्वैखर्याः

## विषयानुक्रमणिका

विजयीन्द्रपदाम्भोजस्मरणैकबलोऽल्पकः ।
यदकार्षमहं तत्तु जगत्प्राणपसात्कृतम् ॥

श्रीः

सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता

# वाग्वैखरी

श्रीवेदव्यासाय नमः ।

## १. मंगलाचरणम्

कल्याणगुणपूर्णाय वल्लभाय श्रियः सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ १ ॥

यस्माद्विश्वमिदं भूयो जायते वर्धते यतः ।
लयमेति तमीशानं सेवे श्रीनृहरिं मुदे ॥ २ ॥

ब्रह्मविन्मुखरङ्गस्थां मध्व ते वाङ्नटीं पराम् ।
विचित्रपदविन्यासैर्मोहयन्तीं भजेऽन्वहम् ॥ ३ ॥

मध्वशास्त्रमहाचापमनुद्धार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे तं जयार्यं सदा भजे ॥ ४ ॥

श्रीमन्मध्वमताब्धीन्दुं दुर्वादिफणिपक्षिपम् ।
ब्रह्मण्याख्यमुनेः शिष्यं व्यासदेशिकमाश्रये ॥ ५ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिशोभिते[1] ॥ ६ ॥

ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृता-
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
या चानेकविनेयषट्पदततेः संफुल्लमल्ली सदा[2]
सैषा वाग्विजयीन्द्रसंयमिमणेर्वाग्वैखरी सेव्यताम् ॥ ७ ॥

---

१. पा.– सेविते ।  २. पा.– समा ।

## २. भगवति प्रमाणाक्षेपः

ननु कथं मुदे त्वं तं [१]नृसिंहं सेवसे। लोके प्रेक्षावन्तस्तमेव सेवन्ते यः कल्याणगुणशालितया प्रमाणेन निश्चितः। नहि त्वं तथात्वेन [२]नृसिंहं [३]केनापि प्रमाणेन निश्चिनोषि। लोके लक्षणप्रमाणाभ्यां हि पदार्थानां स्वरूपावधारणं कुर्वन्तो दृश्यन्ते। नहि नृहरौ लक्षणप्रमाणे स्तः। धर्ममात्रशून्ये तस्मिंस्तद्विशेषरूपस्य लक्षणस्य संभावयितुमशक्यत्वात्। अलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारमिति तस्मिन् लक्षण-सामान्याभावश्रवणात्। अत एव न तस्य प्रमाणगोचरत्वं युज्यते। किञ्चिद्धर्मपुरस्कारं विना विषयप्रत्यायकत्वस्यादर्शनात्। नृहरेश्च धर्ममात्रशून्यत्वात्। केवलो निर्गुणश्चेति श्रुत्या गुणशब्दित-धर्ममात्रनिषेधात्। सर्वेणापि प्रमाणेन सविकल्पकज्ञानस्यैवोत्पत्तेः।

तथाहि न तावत् प्रत्यक्षेण नृहरिः निश्चेतुं शक्यः। चक्षुषो रूपपरिमाणादिशून्ये गुणकर्मसमवायेभ्योऽन्यस्मिन् प्रवृत्त्ययोगात्। 'न सन्दृशे तिष्ठति रूपमस्य, अस्थूलमनणु, न चक्षुषा गृह्यते नापि वाचा न चक्षुषा पश्यति कश्चनैनम्' इति रूपपरिमाणचक्षुर्ग्राह्यत्वनिषेधश्रवणात्। चक्षुस्त्वचोः कालदेशाभ्यामितरस्मिन् द्रव्ये स्वव्यवस्थापकगुण-पुरस्कारेण प्रवृत्तिस्वभावत्वात्। अत एव स्पर्शशून्ये तस्मिंस्त्वचोऽपि न प्रवृत्तिः। किंच रूपादिमत्त्वे घटादिवत् तस्य सर्वेषां चक्षुषोपलंभप्रसङ्गः। योग्यसन्निकर्षसत्त्वात्। नहि सर्वगते तस्मिन् चक्षुषः सन्निकर्षो नैवेति वक्तुं शक्यम्। तत्सर्वगतत्वं च आकाशवत् सर्वगतश्च नित्यः इति श्रवणात्। घ्राणरसनश्रोत्राणां गन्धरसशब्दतद्धर्मवैशिष्ट्यमात्रग्राहकत्वेन द्रव्यग्राहकत्वाभावात्। मनसोऽपि विशेषगुणोपहितात्मग्राहकत्वेन तद्रहिते नृहरौ प्रवृत्त्ययोगात्। अन्यात्ममनसोऽन्यात्मग्रहणे

---

१. नृहरिं–पाठः। २. श्री नृहरिं–पा.। ३. केनचिन्मानेन

सामर्थ्यादर्शनाच्च। यन्मनसा न मनुते इति श्रुत्यैव तस्य मनोग्राह्यत्व-निषेधाच्च ॥

धर्ममात्रशून्यत्वादेव नानुमानेनापि तन्निश्चयः। लिङ्गस्य तद्विशेषत्वात्। न च सामान्यरहिते[१] तद्विशेषः संभवति। नैषा तर्केण मतिरापनेया, हेतुदृष्टान्तवर्जितम् इति तस्यानुमानवेद्यत्वनिषेध-श्रवणाच्च। नाप्युपमानेन। उपमानस्य नियतविषयत्वात् ॥

अर्थापत्त्याऽपि न तन्निश्चयः। नृहरिणा विना अनुपपद्य-मानार्थाभावात्।

नाप्यागमेन तन्निश्चयः। पदानां योगेन रूढ्या योगरूढ्या वा लक्षणया गौण्या वा अर्थप्रत्यायकत्वात्; न (च) हि पदानां नृहरावेतन्मध्ये कश्चन संबन्धः संभवति। कश्छन्दसां योगमावेद धीरः इति योगस्य स्वरूपेणैव दुर्ज्ञानत्वश्रवणात्। अप्राप्य मनसा सह इति प्राप्तिशब्दित-वाच्यवाचकभावरूपसाक्षात्संबन्धस्य कण्ठतः श्रुत्यैव तस्मिन् निषिद्धत्वात्। प्रमाणमात्रस्य बाधकं विना साक्षात्संबन्धविषयत्व-स्वाभाव्यात्। मुख्यार्थसंबन्धरूपलक्षणादेरपि असङ्गो ह्ययं पुरुषः इति संबन्धमात्रनिषेधिकया श्रुत्या निषिद्धत्वात्। परंपरासंबन्धस्यापि दूरे गत्वा केनचित्साक्षात्संबन्धेन विना अयोगाच्च। न चक्षुषा गृह्यते नापि वाचा इति श्रुत्या वाक्शब्दितागममात्रगम्यत्वनिषेधश्रवणाच्च। वाक्यार्थविधयाऽप्यागमगम्यत्वमत एव प्रत्यूढम्। तस्माल्लक्षणा-भावाच्च (प्रमाणाभावाच्च) न नृहरेः स्वरूपावधारणं संभवति। एवं च सति कथं मुदे त्वं तं सेवसे इति चेत्।

---

१. विरहे इति पा.

## ३. भगवति प्रमाणनिरूपणम्

उच्यते। वेदस्य सर्वस्याप्यपौरुषेयत्वेन भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषपूर्वकत्वाभावेन [१]महाप्रबन्धत्वेऽपि कर्त्रनुस्मरणनियमेन अन्यथा वा महाजनैः प्रामाण्यमास्थितम्। अत एव भगवता जैमिनिना पूर्वतन्त्रे प्रमाणलक्षणे अथातो धर्मजिज्ञासेति प्रमाणस्वरूपसाधनफलैः धर्मस्य विचारं प्रतिज्ञाय प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाः चोदनायाः पौरुषेयत्वाद्यप्रामाण्यशङ्काहेतुनिराकरणपूर्वकं तत्र प्रामाण्यमुपपादितम्। द्वितीयपादे अर्थवादमन्त्रयोः विध्यपेक्षितद्रव्यदेवतादिस्तुत्यनुष्ठेयानुस्मृतिसमर्पकतया, तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्यादीनां मूलवेदानुमापकतया, चतुर्थपादे अग्निहोत्रं जुहोति श्येनेनाभिचरन् यजेत इत्यादिविधिवाक्यगताग्निहोत्रादिपदानां नाम्ना कर्मभेदः नाम्ना धर्मातिदेशः नाम्ना दूरस्थस्यानुवादः इत्यादिप्रयोजनवत्या कर्मनामतया च तत्र प्रामाण्यमुपपादितम्। एवं च विध्यर्थवादमन्त्रनामधेयात्मकस्य कृत्स्नस्य वेदस्य यत्प्रामाण्यमुपपादितं तदबाधितार्थकत्वरूपमेव वाच्यम्। कथंचिद्बाधितार्थकत्वरूपत्वे तस्याप्रामाण्यरूपत्व एव पर्यवसानात्। बाधितार्थकं प्रमाणमित्यस्य अब्राह्मणो ब्राह्मण इतिवद् व्याहतत्वात्। यावद्बाधं प्रमाणमित्याश्रयणे शुक्ताविदं रूप्यमित्यादिप्रतीतीनामपि प्रामाण्यापत्तेः। शुक्तिरूप्यादावपि बाधावतारनियमाभावात्। किंच बाधानवतारदशायां प्रमाणमिति धीमात्रं स्यात्। न तु प्रामाण्यम्। तस्यार्थसत्त्वघटितमूर्तित्वेन प्रमाणमिति धीमात्रादन्यत्वात्। किञ्चैवं बाधस्यापि यावद्बाधमेव प्रामाण्यापत्तिः। न चैवं, क्वापि अर्थे वास्तवसद्रूपासिद्धिप्रसङ्गात्।

---

१. महाप्रबन्धत्वेनापि कर्तृस्मरणनियमेन इति पाठः।

## ४. प्रामाण्यस्वरूपविचारः

किञ्चाप्रामाण्यकारणनिरासस्य प्रामाण्यकारणस्य च ब्रह्मकाण्ड इव कर्मकाण्डेऽप्यविशिष्टत्वेन तुल्यवदेव प्रामाण्यमुपेयम्। न तु वैषम्येण। विनिगमकाभावात् वैपरीत्यापत्तेश्च। बाधकं विना तुल्यवत्प्रामाण्याङ्गीकारस्यैवोचित्वात्। तथापि (च) द्वे प्रामाण्ये इति द्वैविध्यासिद्धेः। अर्थासत्त्वे च कर्मकाण्डस्य बौद्धागमवदप्रामाण्यस्यैवापत्तेः। बाधकसत्त्वे कर्मकाण्डार्थः सस्वरूपः, बौद्धागमार्थस्तु निस्स्वरूप इति व्यवस्थानुपपत्तेः। तथाच विमतः कर्मकाण्डः अप्रमाणं भवितुमर्हति बाधितार्थकत्वात् बौद्धागमवदिति प्रयोगः। एवं च प्रामाण्याप्रामाण्ययोः सस्वरूपत्वनिःस्वरूपत्वकृतविशेषोऽनुपपन्नः।

किञ्चैवं भगवतो जैमिनेः तुल्यवद्वेदमात्रे अप्रामाण्यकारणनिरासायासः प्रामाण्यसाधकव्युत्पादनायासश्च निरर्थकः स्यात्। न चैवम्। तत्र तदायासस्य प्रेक्षावत्प्रवृत्त[१]त्वात्। तथाच कृत्स्नस्य वेदस्य अबाधितार्थकत्वेनैव सर्वैरपि वेदप्रामाण्यसाधकव्युत्पादनाय प्रेक्षावत्प्रवर्तितत्वात्। कृत्स्नस्य वेदस्य अबाधितार्थकत्वेनैव सर्वैरपि वेदप्रामाण्यसाधकव्युत्पादनाय प्रेक्षावत्प्रवर्तितत्वात् कृत्स्नस्य वेदस्य अबाधितार्थकत्वेनैव प्रामाण्यमास्थितम्। आस्थेयं च तथा, कृत्स्नवेदस्य हिताहितविषयप्रवृत्तिपरत्वेन मात्रादिवाक्यवत् प्रेक्षावदुपादेयत्वरूपारंभणीयत्वं च। तत्प्रामाण्योपपादकतया 'वाचा विरूप नित्यया, नित्ययाऽनित्यया स्तौमि, श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाचः' इत्यादीनां स्ववाक्यत्वेऽपि वेदस्याविगानेन तदभिहितत्वं च स्वीकृतम्। तथा 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः, वेदविदेव चाहम्, स्वयंभूरेष भगवान् वेदो गीतस्त्वया

---

१. प्रवर्तितत्वात् इति पाठः।

पुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इत्यादिस्मृतीनां वेदमूलत्वेऽपि तदावेदितमपि वेदस्य नित्यत्वमविगानेन स्वीकृतम्। न ह्येवं सिद्धप्रमाणभावे कृत्स्नवेदे शिरोभाग एव तत्रापि ज्ञेयब्रह्मभाग एव तत्त्वावेदकः, नेतरभाग इति शक्यमभ्युपगन्तुम्। तत्त्वावेदकत्वलक्षणप्रामाण्यप्रयोजकस्य नित्यनिर्दोषत्वादेः कृत्स्नवेदेऽप्यविशेषात्। वैपरीत्यापत्तेश्चेत्युक्तम्। तच्च नित्यनिर्दोषत्वं तत्प्रयुक्तप्रामाण्यं च तत्रानारोपितमेव स्वीकार्यम्। नत्वारोपितम्। तथा सति वेदस्य बौद्धाद्यागमाविशेषप्रसङ्गादित्यपि चोक्तम्। न चोत्पत्तिज्ञप्त्योः ज्ञानमात्रप्रामाण्यस्य औत्सर्गिकं स्वतस्त्वमिति स्वीकुर्वद्भिः बाधकं विना अर्थसत्त्वघटितं तत्प्रामाण्यमेव त्यागार्हम्। नहि निर्दोषवेदजन्यं ज्ञानं ज्ञानं न भवतीत्यस्ति। न वा तत्प्रामाण्यं प्रामाण्यं नेति।

अपि च प्रवृत्तिसंवादविसंवादनिर्वाहाय तज्जनकज्ञानप्रामाण्याप्रामाण्ययोः अनारोपितत्वमवश्यमभ्युपेयम्। अन्यथा तत्संवादविसंवादयोराकस्मिकत्वापत्तेः। एतेन प्रवृत्तिसंवादविसंवादयोः तज्जनकज्ञानप्रामाण्याप्रामाण्ययोः अनारोपितत्वं न तन्त्रम्। किन्तु प्रातिभासिकवैलक्षण्यं वा व्यावहारिकत्वं वा तन्त्रमिति निरस्तम्। आगन्तुकदोषाजन्यत्वेन अप्रातिभासिके घटादौ पारमार्थिकत्वस्येव तादृशदोषजन्यत्वेन प्रातिभासिके शुक्तिरूप्यादौ प्रातिभासिकवैलक्षण्यस्येव प्रातिभासिकरजतादिविषयकव्यावहारिकघटादिविषयकज्ञानयोः व्यावहरिकप्रातिभासिकप्रामाण्यारोपसंभवेन तज्जन्यप्रवृत्तिनिवृत्त्योरपि संवादविसंवादापातात्।

किञ्च ज्ञानप्रामाण्याप्रामाण्ययोरपि तद्विषयाबाधितत्वबाधितत्वे एव तन्त्रे। ते अप्यनारोपिते एव तन्त्रे। अन्यथा शुक्तिरूप्यादावप्यारोपसंभवेन तद्विषयकज्ञानस्यापि प्रामाण्यप्रसङ्गात्। ब्रह्मचैतन्ये-

ऽप्यबाधितत्वस्यारोपसंभवेन श्रवणादिसहकृतवेदान्तजन्यब्रह्मज्ञानेऽपि अप्रामाण्यापातात्। तथा च ज्ञानप्रामाण्याप्रामाण्ययोः अनारोपित-विषयसत्त्वासत्त्वे एव प्रयोजके वाच्ये। न तु व्यावहारिकविषय-सत्त्वासत्त्वे। न च व्यावहारिकविषयसत्त्वासत्त्वमनारोपितविशेषितमेव प्रामाण्यप्रयोजकमिति परेण वक्तुं शक्यम्। व्यावहारिकधर्ममात्र-स्याध्यस्तप्रपञ्चान्तर्गतत्वेन परेणानारोपितत्वस्य तद्विशेषणत्वेन अनुपादेयत्वात्।

एतेन अनारोपितविषयसत्त्वादिकं प्रामाण्यादिप्रयोजकमिति न त्वयापि वक्तुं शक्यम्। पदार्थमात्रस्य सर्वं रजतमित्याहार्यारोपविषयत्वेन अनारोपितशब्दार्थस्य आरोपाविषयस्याप्रसिद्धेरिति निरस्तम्।

## ५. सर्वस्यापि वेदान्तभागस्य तत्त्वावेदकत्वेनैव प्रामाण्यम्

सर्वं रजतमित्यादिज्ञानं प्रति रजतादेरेवारोप्यत्वेन आरोपा-विषयशब्देन तद्भिन्नस्यैव शुक्तिशकलादेः प्रसिद्धत्वात्। यद्यपि रजतत्वादेरिव अधिष्ठानभूतशुक्तिकाशकलादेरपि आरोपविषयत्वेन आरोप्यत्वमविशिष्टम्, तथापि यद्विषयत्वेन तज्ज्ञानस्य भ्रमत्वं दोषजन्यत्वं वा तद्विषय एवारोपशब्दार्थ इति न कोऽपि दोषः। तस्माज्ज्ञेयब्रह्मपरवेदान्तभागवत् कृत्स्नः तदितरोऽपि वेदान्तभागः तत्वावेदकत्वेनैव प्रमाणभावं भजत इत्याख्येयम्।

## ६. कर्मकाण्डादीनां निषेध्यसमर्पकत्वेन प्रामाण्यायोगः

एतेन न कलंजं भक्षयेदित्यादौ कलंजभक्षणाद्युपस्थापकभागवत् कर्मकाण्डस्य ब्रह्मकाण्डेऽप्युपासाविधिभागस्य सृष्ट्यादिवाक्यप्रति-योग्युपस्थापकतया 'एकमेवाद्वितीयं, नेह नानास्ति किंचन'

इत्यादिनिषेधैकवाक्यत्वसंभवात् सर्वस्यापि वेदस्य प्रामाण्यं मयाप्यङ्गीक्रियत एवेति निरस्तम्।

न कलंजं भक्षयेदित्यत्र कलंजं भक्षयेदित्यस्येव एकमेवाद्वितीयमित्यादिनिषेधवाक्येऽपि द्वितीयनानाकिंचनशब्दादेः निषेध्यसमर्पकत्वेन कर्मकाण्डादीनां तत्समर्पकत्वेन तदेकवाक्यत्वासिद्धेः। न च निषेधवाक्यगतद्वितीयनानाकिंचनादिशब्दानां द्वितीयत्वादिना सामान्यरूपेण निषेध्यसमर्पकतया विशेषजिज्ञासासत्त्वात् निषेध्यविशेषाकांक्षायां कर्मकाण्डादीनां विशेषनिषेध्यसमर्पकत्वेन निषेधैकवाक्यता किं न स्यादिति वाच्यम्। द्वितीयादिपदेनैव द्वितीयत्वादिसामान्यरूपेण कर्मकाण्डाद्यर्थस्य उपादानसंभवेन निषेध्यत्वसिध्या विशेषाकांक्षानुदयात्। कर्मकाण्डाद्यर्थस्य ब्रह्मणि मानान्तराप्राप्तत्वेन निषेधाय द्वितीयादिपदेन अनुवादानुपपत्तेश्च। न हि कलंजभक्षणादिकर्तव्यतावत् ज्योतिष्टोमादिकर्तव्यतावगतिः प्राप्ता येन कलंजभक्षणाद्युपस्थापकभागवत् कर्मकाण्डादेर्ज्योतिष्टोमादिप्रतिषेध्योपस्थापकत्वेन प्रामाण्यम्। न तु प्रतिषेधवत् स्वातन्त्र्येणेति स्यात्। किंच न कलंजं भक्षयेदित्यादिवाक्यस्य न कलंजभक्षणनिषेधोऽर्थः संभवति। कलंजभक्षणे भोजनादाविव प्रत्यक्षप्राप्तस्य तृप्तिरूपेष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा निषेधायोगात्। नरकासाधनत्वबलवदनिष्टाननुबन्धित्वयोः विध्यर्थत्वाभावेन तन्निषेधायोगात्। परमहितैषिमात्रादिविहित इव तथाभूतवेदविहिते नरकसाधनत्वस्य बलवदनिष्टानुबन्धित्वस्य प्रत्यासत्त्यभावात्। तथाच तदर्थोऽनिष्टसाधनत्वरूप एव वाच्यः। एवं च न तद्भागस्य प्रतियोगिसमर्पकत्वेन प्रामाण्ये दृष्टान्तत्वं युज्यते।

